# यमप्रीत्यर्थं यमस्तोत्रम्

ॐ नियमस्थः स्वयं यश्च कुरुतेऽन्यान्नियन्त्रितान् ।
प्रहरिणे मर्यादानां शमनाय तस्मै नमः ॥ १॥

यस्य स्मृत्या विजानाति भङ्गुरत्वं निजं नरः ।
प्रमादालस्यरहितो बोधकाय नमोऽस्तुते ॥ २॥

विधाय धूलिशयनं येनाहं मानिनां खलु ।
महतां चूर्णितो गर्वः तस्मै नमोऽन्तकाय च ॥ ३॥

यस्य प्रचण्डदण्डस्य विधानेन हि त्रासिताः ।
हाहाकारं प्रकुर्वन्ति दुष्टास्तस्मै नमो नमः ॥ ४॥

कृपादृष्टिरनन्ता च यस्य सत्कर्मकारिषु ।
पुरुषेश नमस्तस्मै यमाय पितृस्वामिने ॥ ५॥

कर्मणां फलदानं हि कार्यमेव यथोचितम् ।
पक्षपातो न कस्यापि नमो यस्य यमाय च ॥ ६॥

यस्य दण्डभयाद्रुद्धः दुष्प्रवृत्तिं कुकर्मकृत् ।
कृतान्ताय नमस्तस्मै प्रदत्ते चेतनां सदा ॥ ७॥

प्राधान्यं येन न्यायस्य महत्त्वं कर्मणां सदा ।
मर्यादारक्षणं कर्त्रे नमस्तस्मै यमाय च ॥ ८॥

न्यायार्थं यस्य सर्वे तु गच्छन्ति मरणोत्तरम् ।
शुभाशुभं फलं प्राप्तुं नमस्तस्मै यमाय च ॥ ९॥

सिंहासनाधिरूढोऽत्र बलवानपि पापकृत् ।
यस्याग्रे कम्पते त्रासात्तस्मै नमोऽन्तकाय च ॥ १०॥

इति श्रीयमस्तोत्रं समाप्तम् ॥